# हठयोगप्रदीपिका

## प्रथमोपदेशः

श्रीआदिनाथाय नमोऽस्तु तस्मै येनोपदिष्टा हठयोगविद्या
विभ्राजते प्रोन्नतराजयोगमारोढुमिच्छोरधिरोहिणीव १
प्रणम्य श्रीगुरुं नाथं स्वात्मारामेण योगिना
केवलं राजयोगाय हठविद्योपदिश्यते २
भ्रान्त्या बहुमतध्वान्ते राजयोगमजानताम्
हठप्रदीपिकां धत्ते स्वात्मारामः कृपाकरः ३
हठविद्यां हि मत्स्येन्द्रगोरक्षाद्या विजानते
स्वात्मारामोऽथवा योगी जानीते तत्प्रसादतः ४
श्रीआदिनाथमत्स्येन्द्रशाबरानन्दभैरवाः
चौरङ्गीमीनगोरक्षविरूपाक्षबिलेशयाः ५
मन्थानो भैरवो योगी सिद्धिर्बुद्धश्च कन्थडिः
कोरण्टकः सुरानन्दः सिद्धपादश्च चर्पटिः ६
कानेरी पूज्यपादश्च नित्यनाथो निरञ्जनः
कपाली बिन्दुनाथश्च काकचण्डीश्वराह्वयः ७
अल्लामः प्रभुदेवश्च घोडाचोली च टिण्टिणिः
भानुकी नारदेवश्च खण्डः कापालिकस्तथा ८
इत्यादयो महासिद्धा हठयोगप्रभावतः
खण्डयित्वा कालदण्डं ब्रह्माण्डे विचरन्ति ते ९
अशेषतापतप्तानां समाश्रयमठो हठः
अशेषयोगयुक्तानामाधारकमठो हठः १०
हठविद्या परं गोप्या योगिना सिद्धिमिच्छता
भवेद्वीर्यवती गुप्ता निर्वीर्या तु प्रकाशिता ११
सुराज्ये धार्मिके देशे सुभिक्षे निरुपद्रवे
धनुः प्रमाणपर्यन्तं शिलाग्निजलवर्जिते
एकान्ते मठिकामध्ये स्थातव्यं हठयोगिना १२
अल्पद्वारमरन्ध्रगर्तविवरं नात्युच्चनीचायतं
सम्यग्गोमयसान्द्रलिप्तममलं निःशेषजन्तूज्झितम्
बाह्ये मण्डपवेदिकूपरुचिरं प्राकारसंवेष्टितं

प्रोक्तं योगमठस्य लक्षणमिदं सिद्धैर्हठाभ्यासिभिः १३
एवं विधे मठे स्थित्वा सर्वचिन्ताविवर्जितः
गुरूपदिष्टमार्गेण योगमेव सदाभ्यसेत् १४
अत्याहारः प्रयासश्च प्रजल्पो नियमाग्रहः
जनसङ्गश्च लौल्यं च षड्भिर्योगो विनश्यति १५
उत्साहात्साहसाद्धैर्यात्तत्त्वज्ञानाच्च निश्चयात्
जनसङ्गपरित्यागात्षड्भिर्योगः प्रसिद्ध्यति १६
अथ यमनियमाः
अहिंसा सत्यमस्तेयं ब्रह्मचर्यं क्षमा धृतिः
दयार्जवं मिताहारः शौचं चैव यमा दश
तपः संतोष आस्तिक्यं दानमीश्वरपूजनम्
सिद्धान्तवाक्यश्रवणं ह्रीमती च जपो हुतम्
नियमा दश संप्रोक्ता योगशास्त्रविशारदैः
हठस्य प्रथमाङ्गत्वादासनं पूर्वमुच्यते
कुर्यात्तदासनं स्थैर्यमारोग्यं चाङ्गलाघवम् १७
वसिष्ठाद्यैश्च मुनिभिर्मत्स्येन्द्राद्यैश्च योगिभिः
अङ्गीकृतान्यासनानि कथ्यन्ते कानिचिन्मया १८
जानूर्वोरन्तरे सम्यक्कृत्वा पादतले उभे
ऋजुकायः समासीनः स्वस्तिकं तत्प्रचक्षते १९
सव्ये दक्षिणगुल्फं तु पृष्ठपार्श्वे नियोजयेत्
दक्षिणेऽपि तथा सव्यं गोमुखं गोमुखाकृति २०
एकं पादं तथैकस्मिन्विन्यसेदूरुणि स्थिरम्
इतरस्मिंस्तथा चोरुं वीरासनमितीरितम् २१
गुदं निरुध्य गुल्फाभ्यां व्युत्क्रमेण समाहितः
कूर्मासनं भवेदेतदिति योगविदो विदुः २२
पद्मासनं तु संस्थाप्य जानूर्वोरन्तरे करौ
निवेश्य भूमौ संस्थाप्य व्योमस्थं कुक्कुटासनम् २३
कुक्कुटासनबन्धस्थो दोर्भ्यां संबध्य कन्धराम्
भवेत्कूर्मवदुत्तान एतदुत्तानकूर्मकम् २४

पादाङ्गुष्ठौ तु पाणिभ्यां गृहीत्वा श्रवणावधि
धनुराकर्षणं कुर्याद्धनुरासनमुच्यते २५
वामोरुमूलार्पितदक्षपादं जानोर्बहिर्वेष्टितवामपादम्
प्रगृह्य तिष्ठेत्परिवर्तिताङ्गः श्रीमत्स्यनाथोदितमासनं स्यात् २६
मत्स्येन्द्रपीठं जठरप्रदीप्तिं प्रचण्डरुग्मण्डलखण्डनास्त्रम्
अभ्यासतः कुण्डलिनीप्रबोधं चन्द्रस्थिरत्वं च ददाति पुंसाम्२७
प्रसार्य पादौ भुवि दण्डरूपौ दोर्भ्यां पदाग्रद्वितयं गृहीत्वा
जानूपरिन्यस्तललाटदेशो वसेदिदं पश्चिमतानमाहुः २८
इति पश्चिमतानमासनाग्र्यं पवनं पश्चिमवाहिनं करोति
उदयं जठरानलस्य कुर्यादुदरे कार्श्यमरोगतां च पुंसाम् २९
धरामवष्टभ्य करद्वयेन तत्कूर्परस्थापितनाभिपार्श्वः
उच्चासनो दण्डवदुत्थितः खे मायूरमेतत्प्रवदन्ति पीठम् ३०
हरति सकलरोगानाशु गुल्मोदरादीन्
अभिभवति च दोषानासनं श्रीमयूरम्
बहु कदशनभुक्तं भस्म कुर्यादशेषं
जनयति जठराग्निं जारयेत्कालकूटम् ३१
उत्तानं शववद्भूमौ शयनं तच्छवासनम्
शवासनं श्रान्तिहरं चित्तविश्रान्तिकारकम् ३२
चतुरशीत्यासनानि शिवेन कथितानि च
तेभ्यश्चतुष्कमादाय सारभूतं ब्रवीम्यहम् ३३
सिद्धं पद्मं तथा सिंहं भद्रं चेति चतुष्टयम्
श्रेष्ठं तत्रापि च सुखे तिष्ठेत्सिद्धासने सदा ३४
तत्र सिद्धासनम्
योनिस्थानकमङ्घ्रिमूलघटितं कृत्वा दृढं विन्यसेत्
मेण्ढ्रे पादमथैकमेव हृदये कृत्वा हनुं सुस्थिरम्
स्थाणुः संयमितेन्द्रियोऽचलदृशा पश्येद्भ्रुवोरन्तरं
ह्येतन्मोक्षकपाटभेदजनकं सिद्धासनं प्रोच्यते ३५
मतान्तरे तु
मेण्ढ्रादुपरि विन्यस्य सव्यं गुल्फं तथोपरि

गुल्फान्तरं च निक्षिप्य सिद्धासनमिदं भवेत् ३६
एतत्सिद्धासनं प्राहुरन्ये वज्रासनं विदुः
मुक्तासनं वदन्त्येके प्राहुर्गुप्तासनं परे ३७
यमेष्विव मिताहारमहिंसां नियमेष्विव
मुख्यं सर्वासनेष्वेकं सिद्धाः सिद्धासनं विदुः ३८
चतुरशीतिपीठेषु सिद्धमेव सदाभ्यसेत्
द्वासप्ततिसहस्राणां नाडीनां मलशोधनम् ३९
आत्मध्यायी मिताहारी यावद्द्वादशवत्सरम्
सदा सिद्धासनाभ्यासाद्योगी निष्पत्तिमाप्नुयात् ४०
किमन्यैर्बहुभिः पीठैः सिद्धे सिद्धासने सति
प्राणानिले सावधाने बद्धे केवलकुम्भके
उत्पद्यते निरायासात्स्वयमेवोन्मनी कला ४१
तथैकस्मिन्नेव दृढे बद्धे सिद्धासने सति
बन्धत्रयमनायासात्स्वयमेवोपजायते ४२
नासनं सिद्धसदृशं न कुम्भः केवलोपमः
न खेचरीसमा मुद्रा न नादसदृशो लयः ४३
अथ पद्मासनम्
वामोरूपरि दक्षिणं च चरणं संस्थाप्य वामं तथा
दक्षोरूपरि पश्चिमेन विधिना धृत्वा कराभ्यां दृढम्
अङ्गुष्ठौ हृदये निधाय चिबुकं नासाग्रमालोकयेत्
एतद्व्याधिविनाशकारि यमिनां पद्मासनं प्रोच्यते ४४
मतान्तरे
उत्तानौ चरणौ कृत्वा ऊरुसंस्थौ प्रयत्नतः
ऊरुमध्ये तथोत्तानौ पाणी कृत्वा ततो दृशौ ४५
नासाग्रे विन्यसेद्राजदन्तमूले तु जिह्वया
उत्तम्भ्य चिबुकं वक्षस्युत्थाप्य पवनं शनैः ४६
इदं पद्मासनं प्रोक्तं सर्वव्याधिविनाशनम्
दुर्लभं येन केनापि धीमता लभ्यते भुवि ४७
कृत्वा संपुटितौ करौ दृढतरं बद्ध्वा तु पद्मासनं

गाढं वक्षसि संनिधाय चिबुकं ध्यायंश्च तच्चेतसि
वारं वारमपानमूर्ध्वमनिलं प्रोत्सारयन्पूरितं
न्यञ्चन्प्राणमुपैति बोधमतुलं शक्तिप्रभावान्नरः ४८
पद्मासने स्थितो योगी नाडीद्वारेण पूरितम्
मारुतं धारयेद्यस्तु स मुक्तो नात्र संशयः ४९
अथ सिंहासनम्
गुल्फौ च वृषणस्याधः सीवन्याः पार्श्वयोः क्षिपेत्
दक्षिणे सव्यगुल्फं तु दक्षगुल्फं तु सव्यके ५०
हस्तौ तु जान्वोः संस्थाप्य स्वाङ्गुलीः संप्रसार्य च
व्यात्तवक्त्रो निरीक्षेत नासाग्रं सुसमाहितः ५१
सिंहासनं भवेदेतत्पूजितं योगिपुंगवैः
बन्धत्रितयसंधानं कुरुते चासनोत्तमम् ५२
अथ भद्रासनम्
गुल्फौ च वृषणस्याधः सीवन्याः पार्श्वयोः क्षिपेत्
सव्यगुल्फं तथा सव्ये दक्षगुल्फं तु दक्षिणे ५३
पार्श्वपादौ च पाणिभ्यां दृढं बद्ध्वा सुनिश्चलम्
भद्रासनं भवेदेतत्सर्वव्याधिविनाशनम्
गोरक्षासनमित्याहुरिदं वै सिद्धयोगिनः ५४
एवमासनबन्धेषु योगीन्द्रो विगतश्रमः
अभ्यसेन्नाडिकाशुद्धिं मुद्रादिपवनक्रियाम् ५५
आसनं कुम्भकं चित्रं मुद्राख्यं करणं तथा
अथ नादानुसंधानमभ्यासानुक्रमो हठे ५६
ब्रह्मचारी मिताहारी त्यागी योगपरायणः
अब्दादूर्ध्वं भवेत्सिद्धो नात्र कार्या विचारणा ५७
सुस्निग्धमधुराहारश्चतुर्थांशविवर्जितः
भुज्यते शिवसंप्रीत्यै मिताहारः स उच्यते ५८
कट्वम्लतीक्ष्णलवणोष्णहरीतशाक
सौवीरतैलतिलसर्षपमद्यमत्स्यान्
आजादिमांसदधितक्रकुलत्थकोल

पिरायाकहिङ्गुलशुनाद्यमपथ्यमाहुः ५९
भोजनमहितं विद्यात्पुनरस्योष्णीकृतं रूक्षम्
अतिलवणमम्लयुक्तं कदशनशाकोत्कटं वर्ज्यम् ६०
वह्निस्त्रीपथिसेवानामादौ वर्जनमाचरेत्
तथा हि गोरक्षवचनम्
वर्जयेद्दुर्जनप्रान्तं वह्निस्त्रीपथिसेवनम्
प्रातःस्नानोपवासादि कायक्लेशविधिं तथा ६१
गोधूमशालियवषाष्टिकशोभनान्नं
क्षीराज्यखण्डनवनीतसितामधूनि
शुण्ठीपटोलकफलादिकपञ्चशाकं
मुद्गादिदिव्यमुदकं च यमीन्द्रपथ्यम् ६२
पुष्टं सुमधुरं स्निग्धं गव्यं धातुप्रपोषणम्
मनोभिलषितं योग्यं योगी भोजनमाचरेत् ६३
युवा वृद्धोऽतिवृद्धो वा व्याधितो दुर्बलोऽपि वा
अभ्यासात्सिद्धिमाप्नोति सर्वयोगेष्वतन्द्रितः ६४
क्रियायुक्तस्य सिद्धिः स्यादक्रियस्य कथं भवेत्
न शास्त्रपाठमात्रेण योगसिद्धिः प्रजायते ६५
न वेषधारणं सिद्धेः कारणं न च तत्कथा
क्रियैव कारणं सिद्धेः सत्यमेतन्न संशयः ६६
पीठानि कुम्भकाश्चित्रा दिव्यानि करणानि च
सर्वाण्यपि हठाभ्यासे राजयोगफलावधि ६७
इति हठप्रदीपिकायां प्रथमोपदेशः

## द्वितीयोपदेशः

अथासने दृढे योगी वशी हितमिताशनः
गुरूपदिष्टमार्गेण प्राणायामान्समभ्यसेत् १
चले वाते चलं चित्तं निश्चले निश्चलं भवेत्
योगी स्थाणुत्वमाप्नोति ततो वायुं निरोधयेत् २
यावद्वायुः स्थितो देहे तावज्जीवनमुच्यते

मरणं तस्य निष्क्रान्तिस्ततो वायुं निरोधयेत् ३
मलाकुलासु नाडीषु मारुतो नैव मध्यगः
कथं स्यादुन्मनीभावः कार्यसिद्धिः कथं भवेत् ४
शुद्धिमेति यदा सर्वं नाडीचक्रं मलाकुलम्
तदैव जायते योगी प्राणसंग्रहणे क्षमः ५
प्राणायामं ततः कुर्यान्नित्यं सात्त्विकया धिया
यथा सुषुम्णानाडीस्था मलाः शुद्धिं प्रयान्ति च ६
बद्धपद्मासनो योगी प्राणं चन्द्रेण पूरयेत्
धारयित्वा यथाशक्ति भूयः सूर्येण रेचयेत् ७
प्राणं सूर्येण चाकृष्य पूरयेदुदरं शनैः
विधिवत्कुम्भकं कृत्वा पुनश्चन्द्रेण रेचयेत् ८
येन त्यजेत्तेन पीत्वा धारयेदतिरोधतः
रेचयेच्च ततोऽन्येन शनैरेव न वेगतः ९
प्राणं चेदिडया पिबेन्नियमितं भूयोऽन्यया रेचयेत्
पीत्वा पिङ्गलया समीरणमथो बद्ध्वा त्यजेद्वामया
सूर्याचन्द्रमसोरनेन विधिनाभ्यासं सदा तन्वतां
शुद्धा नाडिगणा भवन्ति यमिनां मासत्रयादूर्ध्वतः १०
प्रातर्मध्यंदिने सायमर्धरात्रे च कुम्भकान्
शनैरशीतिपर्यन्तं चतुर्वारं समभ्यसेत् ११
कनीयसि भवेत्स्वेदः कम्पो भवति मध्यमे
उत्तमे स्थानमाप्नोति ततो वायुं निबन्धयेत् १२
जलेन श्रमजातेन गात्रमर्दनमाचरेत्
दृढता लघुता चैव तेन गात्रस्य जायते १३
अभ्यासकाले प्रथमे शस्तं क्षीराज्यभोजनम्
ततोऽभ्यासे दृढीभूते न तादृङ्नियमग्रहः १४
यथा सिंहो गजो व्याघ्रो भवेद्वश्यः शनैः शनैः
तथैव सेवितो वायुरन्यथा हन्ति साधकम् १५
प्राणायामेन युक्तेन सर्वरोगक्षयो भवेत्
अयुक्ताभ्यासयोगेन सर्वरोगसमुद्भवः १६

हिक्का श्वासश्च कासश्च शिरःकर्णाक्षिवेदनाः
भवन्ति विविधा रोगाः पवनस्य प्रकोपतः १७
युक्तं युक्तं त्यजेद्वायुं युक्तं युक्तं च पूरयेत्
युक्तं युक्तं च बध्नीयादेवं सिद्धिमवाप्नुयात् १८
यदा तु नाडीशुद्धिः स्यात्तथा चिह्नानि बाह्यतः
कायस्य कृशता कान्तिस्तदा जायेत निश्चितम् १९
यथेष्टं धारणं वायोरनलस्य प्रदीपनम्
नादाभिव्यक्तिरारोग्यं जायते नाडिशोधनात् २०
मेदश्लेष्माधिकः पूर्वं षट्कर्माणि समाचरेत्
अन्यस्तु नाचरेत्तानि दोषाणां समभावतः २१
धौतिर्बस्तिस्तथा नेतिस्त्राटकं नौलिकं तथा
कपालभातिश्चैतानि षट्कर्माणि प्रचक्षते २२
कर्म षट्कमिदं गोप्यं घटशोधनकारकम्
विचित्रगुणसंधायि पूज्यते योगिपुंगवैः २३
तत्र धौतिः
चतुरङ्गुलविस्तारं हस्तपञ्चदशायतम्
गुरूपदिष्टमार्गेण सिक्तं वस्त्रं शनैर्ग्रसेत्
पुनः प्रत्याहरेच्चैतदुदितं धौतिकर्म तत् २४
कासश्वासप्लीहकुष्ठं कफरोगाश्च विंशतिः
धौतिकर्मप्रभावेण प्रयान्त्येव न संशयः २५
अथ बस्तिः
नाभिदघ्नजले पायौ न्यस्तनालोत्कटासनः
आधाराकुञ्चनं कुर्यात्क्षालनं बस्तिकर्म तत् २६
गुल्मप्लीहोदरं चापि वातपित्तकफोद्भवाः
बस्तिकर्मप्रभावेण क्षीयन्ते सकलामयाः २७
धान्त्वद्रियान्तःकरणप्रसादं दधाच्च कान्तिं दहनप्रदीप्तम्
अशेषदोषोपचयं निहन्यादभ्यस्यमानं जलबस्तिकर्म २८
अथ नेतिः
सूत्रं वितस्तिसुस्निग्धं नासानाले प्रवेशयेत्

मुखान्निर्गमयेच्चैषा नेतिः सिद्धैर्निगद्यते २९
कपालशोधिनी चैव दिव्यदृष्टिप्रदायिनी
जत्रूर्ध्वजातरोगौघं नेतिराशु निहन्ति च ३०
अथ त्राटकम्
निरीक्षेन्निश्चलदृशा सूक्ष्मलक्ष्यं समाहितः
अश्रुसंपातपर्यन्तमाचार्यैस्त्राटकं स्मृतम् ३१
मोचनं नेत्ररोगाणां तन्द्रादीनां कपाटकम्
यत्नतस्त्राटकं गोप्यं यथा हाटकपेटकम् ३२
अथ नौलिः
अमन्दावर्तवेगेन तुन्दं सव्यापसव्यतः
नतांसो भ्रामयेदेषा नौलिः सिद्धैः प्रशस्यते ३३
मन्दाग्निसंदीपनपाचनादिसंधापिकानन्दकरी सदैव
अशेषदोषामयशोषणी च हठक्रियामौलिरियं च नौलिः ३४
अथ कपालभातिः
भस्त्रावल्लोहकारस्य रेचपूरौ ससंभ्रमौ
कपालभातिर्विख्याता कफदोषविशोषणी ३५
षट्कर्मनिर्गतस्थौल्यकफदोषमलादिकः
प्राणायामं ततः कुर्यादनायासेन सिद्ध्यति ३६
प्राणायामैरेव सर्वे प्रशुष्यन्ति मला इति
आचार्याणां तु केषांचिदन्यत्कर्म न संमतम् ३७
अथ गजकरणी
उदरगतपदार्थमुद्वमन्ति
पवनमपानमुदीर्य कण्ठनाले
क्रमपरिचयवश्यनाडिचक्रा
गजकरणीति निगद्यते हठज्ञैः ३८
ब्रह्मादयोऽपि त्रिदशाः पवनाभ्यासतत्पराः
अभूवन्नन्तकभयात्तस्मात्पवनमभ्यसेत् ३९
यावद्बद्धो मरुद्देहे यावच्चित्तं निराकुलम्
यावद्दृष्टिर्भ्रुवोर्मध्ये तावत्कालभयं कुतः ४०

विधिवत्प्राणसंयामैर्नाडीचक्रे विशोधिते
सुषुम्नावदनं भित्त्वा सुखाद्विशति मारुतः ४१
अथ मनोन्मनी
मारुते मध्यसंचारे मनःस्थैर्यं प्रजायते
यो मनःसुस्थिरीभावः सैवावस्था मनोन्मनी ४२
तत्सिद्धये विधानज्ञाश्चित्रान्कुर्वन्ति कुम्भकान्
विचित्र कुम्भकाभ्यासाद्विचित्रां सिद्धिमाप्नुयात् ४३
अथ कुम्भकभेदाः
सूर्यभेदनमुज्जायी सीत्कारी शीतली तथा
भस्त्रिका भ्रामरी मूर्च्छा प्लाविनीत्यष्टकुम्भकाः ४४
पूरकान्ते तु कर्तव्यो बन्धो जालंधराभिधः
कुम्भकान्ते रेचकादौ कर्तव्यस्तूड्डियानकः ४५
अधस्तात्कुञ्चनेनाशु कण्ठसंकोचने कृते
मध्ये पश्चिमतानेन स्यात्प्राणो ब्रह्मनाडिगः ४६
आपानमूर्ध्वमुत्थाप्य प्राणं कण्ठादधो नयेत्
योगी जराविमुक्तः सन्षोडशाब्दवया भवेत् ४७
अथ सूर्यभेदनम्
आसने सुखदे योगी बद्ध्वा चैवासनं ततः
दक्षनाड्या समाकृष्य बहिःस्थं पवनं शनैः ४८
आकेशादानखाग्राच्च निरोधावधि कुम्भयेत्
ततः शनैः सव्यनाड्या रेचयेत्पवनं शनैः ४९
कपालशोधनं वातदोषघ्नं कृमिदोषहृत्
पुनः पुनरिदं कार्यं सूर्यभेदनमुत्तमम् ५०
अथोज्जायी
मुखं संयम्य नाडीभ्यामाकृष्य पवनं शनैः
यथा लगति कण्ठात्तु हृदयावधि सस्वनम् ५१
पूर्ववत्कुम्भयेत्प्राणं रेचयेदिडया तथा
श्लेष्मदोषहरं कण्ठे देहानलविवर्धनम् ५२
नाडीजलोदराधातुगतदोषविनाशनम्

गच्छता तिष्ठता कार्यमुज्जाय्याख्यं तु कुम्भकम् ५३
अथ सीत्कारी
सीत्कां कुर्यात्तथा वक्त्रे घ्राणेनैव विजृम्भिकाम्
एवमभ्यासयोगेन कामदेवो द्वितीयकः ५४
योगिनी चक्रसंमान्यः सृष्टिसंहारकारकः
न क्षुधा न तृषा निद्रा नैवालस्यं प्रजायते ५५
भवेत्सत्त्वं च देहस्य सर्वोपद्रववर्जितः
अनेन विधिना सत्यं योगीन्द्रो भूमिमण्डले ५६
अथ शीतली
जिह्वया वायुमाकृष्य पूर्ववत्कुम्भसाधनम्
शनकैर्घ्राणरन्ध्राभ्यां रेचयेत्पवनं सुधीः ५७
गुल्मप्लीहादिकान्रोगान्ज्वरं पित्तं क्षुधां तृषाम्
विषाणि शीतली नाम कुम्भिकेयं निहन्ति हि ५८
अथ भस्त्रिका
ऊर्वोरुपरि संस्थाप्य शुभे पादतले उभे
पद्मासनं भवेदेतत्सर्वपापप्रणाशनम् ५९
सम्यक्पद्मासनं बद्ध्वा समग्रीवोदरः सुधीः
मुखं संयम्य यत्नेन प्राणं घ्राणेन रेचयेत् ६०
यथा लगति हृत्कण्ठे कपालावधि सस्वनम्
वेगेन पूरयेच्चापि हृत्पद्मावधि मारुतम् ६१
पुनर्विरेचयेत्तद्वत्पूरयेच्च पुनः पुनः
यथैव लोहकारेण भस्त्रा वेगेन चाल्यते ६२
तथैव स्वशरीरस्थं चालयेत्पवनं धिया
यदा श्रमो भवेद्देहे तदा सूर्येण पूरयेत् ६३
यथोदरं भवेत्पूर्णमनिलेन तथा लघु
धारयेन्नासिकां मध्यातर्जनीभ्यां विना दृढम् ६४
विधिवत्कुम्भकं कृत्वा रेचयेदिडयानिलम्
वातपित्तश्लेष्महरं शरीराग्निविवर्धनम् ६५
कुण्डली बोधकं क्षिप्रं पवनं सुखदं हितम्

ब्रह्मनाडीमुखे संस्थकफाद्यर्गलनाशनम् ६६
सम्यग्गात्रसमुद्भूतग्रन्थित्रयविभेदकम्
विशेषेणैव कर्तव्यं भस्त्राख्यं कुम्भकं त्विदम् ६७
अथ भ्रामरी
वेगाद्घोषं पूरकं भृङ्गनादं
भृङ्गीनादं रेचकं मन्दमन्दम्
योगीन्द्राणामेवमभ्यासयोगाच्
चित्ते जाता काचिदानन्दलीला ६८
अथ मूर्च्छा
पूरकान्ते गाढतरं बद्ध्वा जालन्धरं शनैः
रेचयेन्मूर्च्छाख्येयं मनोमूर्च्छा सुखप्रदा ६९
अथ प्लाविनी
अन्तः प्रवर्तितोदारमारुतापूरितोदरः
पयस्यगाधेऽपि सुखात्प्लवते पद्मपत्रवत् ७०
प्राणायामस्त्रिधा प्रोक्तो रेचपूरककुम्भकैः
सहितः केवलश्चेति कुम्भको द्विविधो मतः ७१
यावत्केवलसिद्धिः स्यात्सहितं तावदभ्यसेत्
रेचकं पूरकं मुक्त्वा सुखं यद्वायुधारणम् ७२
प्राणायामोऽयमित्युक्तः स वै केवलकुम्भकः
कुम्भके केवले सिद्धे रेचपूरकवर्जिते ७३
न तस्य दुर्लभं किंचित्त्रिषु लोकेषु विद्यते
शक्तः केवलकुम्भेन यथेष्टं वायुधारणात् ७४
राजयोगपदं चापि लभते नात्र संशयः
कुम्भकात्कुण्डलीबोधः कुण्डलीबोधतो भवेत्
अनर्गला सुषुम्ना च हठसिद्धिश्च जायते ७५
हठं विना राजयोगो राजयोगं विना हठः
न सिध्यति ततो युग्ममानिष्पत्तेः समभ्यसेत् ७६
कुम्भकप्राणरोधान्ते कुर्याच्चित्तं निराश्रयम्
एवमभ्यासयोगेन राजयोगपदं व्रजेत् ७७

वपुः कृशत्वं वदने प्रसन्नता
नादस्फुटत्वं नयने सुनिर्मले
अरोगता बिन्दुजयोऽग्निदीपनं
नाडीविशुद्धिर्हठसिद्धिलक्षणम् ७८
इति हठयोगप्रदीपिकायां द्वितीयोपदेशः

तृतीयोपदेशः

सशैलवनधात्रीणां यथाधारोऽहिनायकः
सर्वेषां योगतन्त्राणां तथाधारो हि कुण्डली १
सुप्ता गुरुप्रसादेन यदा जागर्ति कुण्डली
तदा सर्वाणि पद्मानि भिद्यन्ते ग्रन्थयोऽपि च २
प्राणस्य शून्यपदवी तदा राजपथायते
तदा चित्तं निरालम्बं तदा कालस्य वञ्चनम् ३
सुषुम्ना शून्यपदवी ब्रह्मरन्ध्रं महापथः
श्मशानं शांभवी मध्यमार्गश्चेत्येकवाचकाः ४
तस्मात्सर्वप्रयत्नेन प्रबोधयितुमीश्वरीम्
ब्रह्मद्वारमुखे सुप्तां मुद्राभ्यासं समाचरेत् ५
महामुद्रा महाबन्धो महावेधश्च खेचरी
उड्यानं मूलबन्धश्च बन्धो जालंधराभिधः ६
करणी विपरीताख्या वज्रोली शक्तिचालनम्
इदं हि मुद्रादशकं जरामरणनाशनम् ७
आदिनाथोदितं दिव्यमष्टैश्वर्यप्रदायकम्
वल्लभं सर्वसिद्धानां दुर्लभं मरुतामपि ८
गोपनीयं प्रयत्नेन यथा रत्नकरण्डकम्
कस्यचिन्नैव वक्तव्यं कुलस्त्रीसुरतं यथा ९
अथ महामुद्रा
पादमूलेन वामेन योनिं संपीड्य दक्षिणम्
प्रसारितं पदं कृत्वा कराभ्यां धारयेद्दृढम् १०
कण्ठे बन्धं समारोप्य धारयेद्वायुमूर्ध्वतः

यथा दण्डहतः सर्पो दण्डाकारः प्रजायते ११
ऋज्वीभूता तथा शक्तिः कुण्डली सहसा भवेत्
तदा सा मरणावस्था जायते द्विपुटाश्रया १२
ततः शनैः शनैरेव रेचयेन्नैव वेगतः
इयं खलु महामुद्रा महासिद्धैः प्रदर्शिता १३
महाक्लेशादयो दोषाः क्षीयन्ते मरणादयः
महामुद्रां च तेनैव वदन्ति विबुधोत्तमाः १४
चन्द्राङ्गे तु समभ्यस्य सूर्याङ्गे पुनरभ्यसेत्
यावत्तुल्या भवेत्संख्या ततो मुद्रां विसर्जयेत् १५
न हि पथ्यमपथ्यं वा रसाः सर्वेऽपि नीरसाः
अपि भुक्तं विषं घोरं पीयूषमिव जीर्यति १६
क्षयकुष्ठगुदावर्तगुल्माजीर्णपुरोगमाः
तस्य दोषाः क्षयं यान्ति महामुद्रां तु योऽभ्यसेत् १७
कथितेयं महामुद्रा महासिद्धिकरी नृणाम्
गोपनीया प्रयत्नेन न देया यस्य कस्यचित् १८
अथ महाबन्धः
पार्ष्णिं वामस्य पादस्य योनिस्थाने नियोजयेत्
वामोरूपरि संस्थाप्य दक्षिणं चरणं तथा १९
पूरयित्वा ततो वायुं हृदये चुबुकं दृढम्
निष्पीड्य योनिमाकुञ्च्य मनो मध्ये नियोजयेत् २०
धारयित्वा यथाशक्ति रेचयेदनिलं शनैः
सव्याङ्गे तु समभ्यस्य दक्षाङ्गे पुनरभ्यसेत् २१
मतमत्र तु केषांचित्कण्ठबन्धं विवर्जयेत्
राजदन्तस्थजिह्वायां बन्धः शस्तो भवेदिति २२
अयं तु सर्वनाडीनामूर्ध्वगतिनिरोधकः
अयं खलु महाबन्धो महासिद्धिप्रदायकः २३
कालपाशमहाबन्धविमोचनविचक्षणः
त्रिवेणीसंगमं धत्ते केदारं प्रापयेन्मनः २४
रूपलावण्यसंपन्ना यथा स्त्री पुरुषं विना

महामुद्रामहाबन्धौ निष्फलौ वेधवर्जितौ २५
अथ महावेधः
महाबन्धस्थितो योगी कृत्वा पूरकमेकधीः
वायूनां गतिमावृत्य निभृतं कण्ठमुद्रया २६
समहस्तयुगो भूमौ स्फिचौ संताडयेच्छनैः
पुटद्वयमतिक्रम्य वायुः स्फुरति मध्यगः २७
सोमसूर्याग्निसंबन्धो जायते चामृताय वै
मृतावस्था समुत्पन्ना ततो वायुं विरेचयेत् २८
महावेधोऽयमभ्यासान्महासिद्धिप्रदायकः
वलीपलितवेपघ्नः सेव्यते साधकोत्तमैः २९
एतत्त्रयं महागुह्यं जरामृत्युविनाशनम्
वह्निवृद्धिकरं चैव ह्यणिमादिगुणप्रदम् ३०
अष्टधा क्रियते चैव यामे यामे दिने दिने
पुण्यसंभारसंधायि पापौघभिदुरं सदा
सम्यक्शिक्षावतामेवं स्वल्पं प्रथमसाधनम् ३१
अथ खेचरी
कपालकुहरे जिह्वा प्रविष्टा विपरीतगा
भ्रुवोरन्तर्गता दृष्टिर्मुद्रा भवति खेचरी ३२
छेदनचालनदोहैः कलां क्रमेणाथ वर्धयेत्तावत्
सा यावद्भ्रूमध्यं स्पृशति तदा खेचरीसिद्धिः ३३
स्नुहीपत्रनिभं शस्त्रं सुतीक्ष्णं स्निग्धनिर्मलम्
समादाय ततस्तेन रोममात्रं समुच्छिनेत् ३४
ततः सैन्धवपथ्याभ्यां चूर्णिताभ्यां प्रघर्षयेत्
पुनः सप्तदिने प्राप्ते रोममात्रं समुच्छिनेत् ३५
एवं क्रमेण षण्मासं नित्यं युक्तः समाचरेत्
षण्मासाद्रसनामूलशिराबन्धः प्रणश्यति ३६
कलां पराङ्मुखीं कृत्वा त्रिपथे परियोजयेत्
सा भवेत्खेचरी मुद्रा व्योमचक्रं तदुच्यते ३७
रसनामूर्ध्वगां कृत्वा क्षणार्धमपि तिष्ठति

विषैर्विमुच्यते योगी व्याधिमृत्युजरादिभिः ३८
न रोगो मरणं तन्द्रा न निद्रा न क्षुधा तृषा
न च मूर्च्छा भवेत्तस्य यो मुद्रां वेत्ति खेचरीम् ३९
पीड्यते न स रोगेण लिप्यते न च कर्मणा
बाध्यते न स कालेन यो मुद्रां वेत्ति खेचरीम् ४०
चित्तं चरति खे यस्माज्जिह्वा चरति खे गता
तेनैषा खेचरी नाम मुद्रा सिद्धैर्निरूपिता ४१
खेचर्या मुद्रितं येन विवरं लम्बिकोर्ध्वतः
न तस्य क्षरते बिन्दुः कामिन्याश्लेषितस्य च ४२
चलितोऽपि यदा बिन्दुः संप्राप्तो योनिमण्डलम्
व्रजत्यूर्ध्वं हृतः शक्त्या निबद्धो योनिमुद्रया ४३
ऊर्ध्वजिह्वः स्थिरो भूत्वा सोमपानं करोति यः
मासार्धेन न संदेहो मृत्युं जयति योगवित् ४४
नित्यं सोमकलापूर्णं शरीरं यस्य योगिनः
तक्षकेणापि दष्टस्य विषं तस्य न सर्पति ४५
इन्धनानि यथा वह्निस्तैलवर्तिं च दीपकः
तथा सोमकलापूर्णं देही देहं न मुञ्चति ४६
गोमांसं भक्षयेन्नित्यं पिबेदमरवारुणीम्
कुलीनं तमहं मन्य इतरे कुलघातकाः ४७
गोशब्देनोदिता जिह्वा तत्प्रवेशो हि तालुनि
गोमांसभक्षणं तत्तु महापातकनाशनम् ४८
जिह्वाप्रवेशसंभूतवह्निनोत्पादितः खलु
चन्द्रात्स्रवति यः सारः सा स्यादमरवारुणी ४९
चुम्बन्ती यदि लम्बिकाग्रमनिशं जिह्वारसस्यन्दिनी
सक्षारा कटुकाम्लदुग्धसदृशी मध्वाज्यतुल्या तथा
व्याधीनां हरणं जरान्तकरणं शस्त्रागमोदीरणं
तस्य स्यादमरत्वमष्टगुणितं सिद्धाङ्गनाकर्षणम् ५०
मूर्ध्नः षोडशपत्रपद्मगलितं प्राणादवाप्तं हठाद्
ऊर्ध्वास्यो रसनां नियम्य विवरे शक्तिं परां चिन्तयन्

उत्कल्लोलकलाजलं च विमलं धारामयं यः पिबेन्
निर्व्याधिः स मृणालकोमलवपुर्योगी चिरं जीवति ५१
यत्प्रालेयं प्रहितसुषिरं मेरुमूर्धान्तरस्थं
तस्मिंस्तत्त्वं प्रवदति सुधीस्तन्मुखं निम्नगानाम्
चन्द्रात्सारः स्रवति वपुषस्तेन मृत्युर्नराणां
तद्बध्नीयात्सुकरणमधो नान्यथा कायसिद्धिः ५२
सुषिरं ज्ञानजनकं पञ्चस्रोतःसमन्वितम्
तिष्ठते खेचरी मुद्रा तस्मिन्शून्ये निरञ्जने ५३
एकं सृष्टिमयं बीजमेका मुद्रा च खेचरी
एको देवो निरालम्ब एकावस्था मनोन्मनी ५४
अथोड्डीयानबन्धः
बद्धो येन सुषुम्नायां प्राणस्तूड्डीयते यतः
तस्मादुड्डीयनाख्योऽयं योगिभिः समुदाहृतः ५५
उड्डीनं कुरुते यस्मादविश्रान्तं महाखगः
उड्डीयानं तदेव स्यात्तत्र बन्धोऽभिधीयते ५६
उदरे पश्चिमं तानं नाभेरूर्ध्वं च कारयेत्
उड्डीयानो ह्यसौ बन्धो मृत्युमातङ्गकेसरी ५७
उड्डीयानं तु सहजं गुरुणा कथितं सदा
अभ्यसेत्सततं यस्तु वृद्धोऽपि तरुणायते ५८
नाभेरूर्ध्वमधश्चापि तानं कुर्यात्प्रयत्नतः
षण्मासमभ्यसेन्मृत्युं जयत्येव न संशयः ५९
सर्वेषामेव बन्धानामुत्तमो ह्युड्डीयानकः
उड्डियाने दृढे बन्धे मुक्तिः स्वाभाविकी भवेत् ६०
अथ मूलबन्धः
पार्ष्णिभागेन संपीड्य योनिमाकुञ्चयेद्गुदम्
अपानमूर्ध्वमाकृष्य मूलबन्धोऽभिधीयते ६१
अधोगतिमपानं वा ऊर्ध्वगं कुरुते बलात्
आकुञ्चनेन तं प्राहुर्मूलबन्धं हि योगिनः ६२
गुदं पार्ष्ण्या तु संपीड्य वायुमाकुञ्चयेद्बलात्

वारं वारं यथा चोर्ध्वं समायाति समीरणः ६३
प्राणापानौ नादबिन्दू मूलबन्धेन चैकताम्
गत्वा योगस्य संसिद्धिं यच्छतो नात्र संशयः ६४
अपानप्राणयोरैक्यं क्षयो मूत्रपुरीषयोः
युवा भवति वृद्धोऽपि सततं मूलबन्धनात् ६५
अपान ऊर्ध्वगे जाते प्रयाते वह्निमण्डलम्
तदानलशिखा दीर्घा जायते वायुनाहता ६६
ततो यातो वह्न्यपानौ प्राणमुष्णस्वरूपकम्
तेनात्यन्तप्रदीप्तस्तु ज्वलनो देहजस्तथा ६७
तेन कुण्डलिनी सुप्ता संतप्ता संप्रबुध्यते
दण्डाहता भुजङ्गीव निश्वस्य ऋजुतां व्रजेत् ६८
बिलं प्रविष्टेव ततो ब्रह्मनाड्यन्तरं व्रजेत्
तस्मान्नित्यं मूलबन्धः कर्तव्यो योगिभिः सदा ६९
अथ जालंधरबन्धः
कण्ठमाकुञ्च्य हृदये स्थापयेच्चिबुकं दृढम्
बन्धो जालंधराख्योऽयं जरामृत्युविनाशकः ७०
बध्नाति हि सिराजालमधोगामि नभोजलम्
ततो जालंधरो बन्धः कण्ठदुःखौघनाशनः ७१
जालंधरे कृते बन्धे कण्ठसंकोचलक्षणे
न पीयूषं पतत्यग्नौ न च वायुः प्रकुप्यति ७२
कण्ठसंकोचनेनैव द्वे नाड्यौ स्तम्भयेद्दृढम्
मध्यचक्रमिदं ज्ञेयं षोडशाधारबन्धनम् ७३
मूलस्थानं समाकुञ्च्य उड्डियानं तु कारयेत्
इडां च पिङ्गलां बद्ध्वा वाहयेत्पश्चिमे पथि ७४
अनेनैव विधानेन प्रयाति पवनो लयम्
ततो न जायते मृत्युर्जरारोगादिकं तथा ७५
बन्धत्रयमिदं श्रेष्ठं महासिद्धैश्च सेवितम्
सर्वेषां हठतन्त्राणां साधनं योगिनो विदुः ७६
यत्किंचित्स्रवते चन्द्रादमृतं दिव्यरूपिणः

तत्सर्वं ग्रसते सूर्यस्तेन पिण्डो जरायुतः ७७
अथ विपरीतकरणी मुद्रा
तत्रास्ति करणं दिव्यं सूर्यस्य मुखवञ्चनम्
गुरूपदेशतो ज्ञेयं न तु शास्त्रार्थकोटिभिः ७८
ऊर्ध्वनाभेरधस्तालोरूर्ध्वं भानुरधः शशी
करणी विपरीताख्या गुरुवाक्येन लभ्यते ७९
नित्यमभ्यासयुक्तस्य जठराग्निविवर्धिनी
आहारो बहुलस्तस्य संपाद्यः साधकस्य च ८०
अल्पाहारो यदि भवेदग्निर्दहति तत्क्षणात्
अधःशिराश्चोर्ध्वपादः क्षणं स्यात्प्रथमे दिने ८१
क्षणाच्च किंचिदधिकमभ्यसेच्च दिने दिने
वलितं पलितं चैव षण्मासोर्ध्वं न दृश्यते
याममात्रं तु यो नित्यमभ्यसेत्स तु कालजित् ८२
अथ वज्रोली
स्वेच्छया वर्तमानोऽपि योगोक्तैर्नियमैर्विना
वज्रोलीं यो विजानाति स योगी सिद्धिभाजनम् ८३
तत्र वस्तुद्वयं वक्ष्ये दुर्लभं यस्य कस्यचित्
क्षीरं चैकं द्वितीयं तु नारी च वशवर्तिनी ८४
मेहनेन शनैः सम्यगूर्ध्वाकुञ्चनमभ्यसेत्
पुरुषोऽप्यथवा नारी वज्रोलीसिद्धिमाप्नुयात् ८५
यत्नतः शस्तनालेन फूत्कारं वज्रकन्दरे
शनैः शनैः प्रकुर्वीत वायुसंचारकारणात् ८६
नारीभगे पतद्बिन्दुमभ्यासेनोर्ध्वमाहरेत्
चलितं च निजं बिन्दुमूर्ध्वमाकृष्य रक्षयेत् ८७
एवं संरक्षयेद्बिन्दुं जयति योगवित्
मरणं बिन्दुपातेन जीवनं बिन्दुधारणात् ८८
सुगन्धो योगिनो देहे जायते बिन्दुधारणात्
यावद्बिन्दुः स्थिरो देहे तावत्कालभयं कुतः ८९
चित्तायत्तं नृणां शुक्रं शुक्रायत्तं च जीवितम्

तस्माच्छुक्रं मनश्चैव रक्षणीयं प्रयत्नतः ९०
ऋतुमत्या रजोऽप्येवं निजं बिन्दुं च रक्षयेत्
मेण्ढ्रेणाकर्षयेदूर्ध्वं सम्यगभ्यासयोगवित् ९१
अथ सहजोलिः
सहजोलिश्चामरोलिर्वज्रोल्या भेद एकतः
जले सुभस्म निक्षिप्य दग्धगोमयसंभवम् ९२
वज्रोलीमैथुनादूर्ध्वं स्त्रीपुंसोः स्वङ्गलेपनम्
आसीनयोः सुखेनैव मुक्तव्यापारयोः क्षणात् ९३
सहजोलिरियं प्रोक्ता श्रद्धेया योगिभिः सदा
अयं शुभकरो योगो भोगयुक्तोऽपि मुक्तिदः ९४
अयं योगः पुण्यवतां धीराणां तत्त्वदर्शिनाम्
निर्मत्सराणां वै सिध्येन्न तु मत्सरशालिनाम् ९५
अथामरोली
पित्तोल्बणत्वात्प्रथमाम्बुधारां
विहाय निःसारतयान्त्यधाराम्
निषेव्यते शीतलमध्यधारा
कापालिके खण्डमतेऽमरोली ९६
अमरीं यः पिबेन्नित्यं नस्यं कुर्वन्दिने दिने
वज्रोलीमभ्यसेत्सम्यक्सामरोलीति कथ्यते ९७
अभ्यासान्निःसृतां चान्द्रीं विभूत्या सह मिश्रयेत्
धारयेदुत्तमाङ्गेषु दिव्यदृष्टिः प्रजायते ९८
पुंसो बिन्दुं समाकुञ्च्य सम्यगभ्यासपाटवात्
यदि नारी रजो रक्षेद्वज्रोल्या सापि योगिनी ९९
तस्याः किंचिद्रजो नाशं न गच्छति न संशयः
तस्याः शरीरे नादश्च बिन्दुतामेव गच्छति १००
स बिन्दुस्तद्रजश्चैव एकीभूय स्वदेहगौ
वज्रोल्यभ्यासयोगेन सर्वसिद्धिं प्रयच्छतः १०१
रक्षेदाकुञ्चनादूर्ध्वं या रजः सा हि योगिनी
अतीतानागतं वेत्ति खेचरी च भवेद्ध्रुवम् १०२

देहसिद्धिं च लभते वज्रोल्यभ्यासयोगतः
अयं पुण्यकरो योगो भोगे भुक्तेऽपि मुक्तिदः १०३
अथ शक्तिचालनम्
कुटिलाङ्गी कुण्डलिनी भुजङ्गी शक्तिरीश्वरी
कुण्डल्यरुन्धती चैते शब्दाः पर्यायवाचकाः १०४
उद्घाटयेत्कपाटं तु यथा कुञ्चिकया हठात्
कुण्डलिन्या तथा योगी मोक्षद्वारं विभेदयेत् १०५
येन मार्गेण गन्तव्यं ब्रह्मस्थानं निरामयम्
मुखेनाच्छाद्य तद्वारं प्रसुप्ता परमेश्वरी १०६
कन्दोर्ध्वे कुण्डली शक्तिः सुप्ता मोक्षाय योगिनाम्
बन्धनाय च मूढानां यस्तां वेत्ति स योगवित् १०७
कुण्डली कुटिलाकारा सर्पवत्परिकीर्तिता
सा शक्तिश्चालिता येन स मुक्तो नात्र संशयः १०८
गङ्गायमुनयोर्मध्ये बालरण्डां तपस्विनीम्
बलात्कारेण गृह्णीयात्तद्विष्णोः परमं पदम् १०९
इडा भगवती गङ्गा पिङ्गला यमुना नदी
इडापिङ्गलयोर्मध्ये बालरण्डा च कुण्डली ११०
पुच्छे प्रगृह्य भुजगीं सुप्तामुद्बोधयेच्च ताम्
निद्रां विहाय सा शक्तिरूर्ध्वमुत्तिष्ठते हठात् १११
अवस्थिता चैव फणावती सा
प्रातश्च सायं प्रहरार्धमात्रम्
प्रपूर्य सूर्यात्परिधानयुक्त्या
प्रगृह्य नित्यं परिचालनीया ११२
ऊर्ध्वं वितस्तिमात्रं तु विस्तारं चतुरङ्गुलम्
मृदुलं धवलं प्रोक्तं वेष्टिताम्बरलक्षणम् ११३
सति वज्रासने पादौ कराभ्यां धारयेद्दृढम्
गुल्फदेशसमीपे च कन्दं तत्र प्रपीडयेत् ११४
वज्रासने स्थितो योगी चालयित्वा च कुण्डलीम्
कुर्यादनन्तरं भस्त्रां कुण्डलीमाशु बोधयेत् ११५

भानोराकुञ्चनं कुर्यात्कुण्डलीं चालयेत्ततः
मृत्युवक्त्रगतस्यापि तस्य मृत्युभयं कुतः ११६
मुहूर्तद्वयपर्यन्तं निर्भयं चालनादसौ
ऊर्ध्वमाकृष्यते किंचित्सुषुम्नायां समुद्गता ११७
तेन कुण्डलिनी तस्याः सुषुम्नाया मुखं ध्रुवम्
जहाति तस्मात्प्राणोऽयं सुषुम्नां व्रजति स्वतः ११८
तस्मात्संचालयेन्नित्यं सुखसुप्तामरुन्धतीम्
तस्याः संचालनेनैव योगी रोगैः प्रमुच्यते ११९
येन संचालिता शक्तिः स योगी सिद्धिभाजनम्
किमत्र बहुनोक्तेन कालं जयति लीलया १२०
ब्रह्मचर्यरतस्यैव नित्यं हितमिताशिनः
मण्डलाद्दृश्यते सिद्धिः कुण्डल्यभ्यासयोगिनः १२१
कुण्डलीं चालयित्वा तु भस्त्रां कुर्याद्विशेषतः
एवमभ्यस्यतो नित्यं यमिनो यमभीः कुतः १२२
द्वासप्ततिसहस्राणां नाडीनां मलशोधने
कुतः प्रक्षालनोपायः कुण्डल्यभ्यसनादृते १२३
इयं तु मध्यमा नाडी दृढाभ्यासेन योगिनाम्
आसनप्राणसंयाममुद्राभिः सरला भवेत् १२४
अभ्यासे तु विनिद्राणां मनो धृत्वा समाधिना
रुद्राणी वा परा मुद्रा भद्रां सिद्धिं प्रयच्छति १२५
राजयोगं विना पृथ्वी राजयोगं विना निशा
राजयोगं विना मुद्रा विचित्रापि न शोभते १२६
मारुतस्य विधिं सर्वं मनोयुक्तं समभ्यसेत्
इतरत्र न कर्तव्या मनोवृत्तिर्मनीषिणा १२७
इति मुद्रा दश प्रोक्ता आदिनाथेन शंभुना
एकैका तासु यमिनां महासिद्धिप्रदायिनी १२८
उपदेशं हि मुद्राणां यो दत्ते सांप्रदायिकम्
स एव श्रीगुरुः स्वामी साक्षादीश्वर एव सः १२९
तस्य वाक्यपरो भूत्वा मुद्राभ्यासे समाहितः

अणिमादिगुणैः सार्धं लभते कालवञ्चनम् १३०
इति हठप्रदीपिकायां तृतीयोपदेशः

चतुर्थोपदेशः

नमः शिवाय गुरवे नादबिन्दुकलात्मने
निरञ्जनपदं याति नित्यं तत्र परायणः १
अथेदानीं प्रवक्ष्यामि समाधिक्रममुत्तमम्
मृत्युघ्नं च सुखोपायं ब्रह्मानन्दकरं परम् २
राजयोगः समाधिश्च उन्मनी च मनोन्मनी
अमरत्वं लयस्तत्त्वं शून्याशून्यं परं पदम् ३
अमनस्कं तथाद्वैतं निरालम्बं निरञ्जनम्
जीवन्मुक्तिश्च सहजा तुर्या चेत्येकवाचकाः ४
सलिले सैन्धवं यद्वत्साम्यं भजति योगतः
तथात्ममनसोरैक्यं समाधिरभिधीयते ५
यदा संक्षीयते प्राणो मानसं च प्रलीयते
तदा समरसत्वं च समाधिरभिधीयते ६
तत्समं च द्वयोरैक्यं जीवात्मपरमात्मनोः
प्रनष्टसर्वसंकल्पः समाधिः सोऽभिधीयते ७
राजयोगस्य माहात्म्यं को वा जानाति तत्त्वतः
ज्ञानं मुक्तिः स्थितिः सिद्धिर्गुरुवाक्येन लभ्यते ८
दुर्लभो विषयत्यागो दुर्लभं तत्त्वदर्शनम्
दुर्लभा सहजावस्था सद्गुरोः करुणां विना ९
विविधैरासनैः कुम्भैर्विचित्रैः करणैरपि
प्रबुद्धायां महाशक्तौ प्राणः शून्ये प्रलीयते १०
उत्पन्नशक्तिबोधस्य त्यक्तनिःशेषकर्मणः
योगिनः सहजावस्था स्वयमेव प्रजायते ११
सुषुम्नावाहिनि प्राणे शून्ये विशति मानसे
तदा सर्वाणि कर्माणि निर्मूलयति योगवित् १२
अमराय नमस्तुभ्यं सोऽपि कालस्त्वया जितः

पतितं वदने यस्य जगदेतच्चराचरम् १३
चित्ते समत्वमापन्ने वायौ व्रजति मध्यमे
तदामरोली वज्रोली सहजोली प्रजायते १४
ज्ञानं कुतो मनसि संभवतीह तावत्
प्राणोऽपि जीवति मनो म्रियते न यावत्
प्राणो मनो द्वयमिदं विलयं नयेद्यो
मोक्षं स गच्छति नरो न कथंचिदन्यः १५
ज्ञात्वा सुषुम्नासद्भेदं कृत्वा वायुं च मध्यगम्
स्थित्वा सदैव सुस्थाने ब्रह्मरन्ध्रे निरोधयेत् १६
सूर्याचन्द्रमसौ धत्तः कालं रात्रिंदिवात्मकम्
भोक्त्री सुषुम्ना कालस्य गुह्यमेतदुदाहृतम् १७
द्वासप्ततिसहस्राणि नाडीद्वाराणि पञ्जरे
सुषुम्ना शांभवी शक्तिः शेषास्त्वेव निरर्थकाः १८
वायुः परिचितो यस्मादग्निना सह कुण्डलीम्
बोधयित्वा सुषुम्नायां प्रविशेदनिरोधतः १९
सुषुम्नावाहिनि प्राणे सिद्ध्यत्येव मनोन्मनी
अन्यथा त्वितराभ्यासाः प्रयासायैव योगिनाम् २०
पवनो बध्यते येन मनस्तेनैव बध्यते
मनश्च बध्यते येन पवनस्तेन बध्यते २१
हेतुद्वयं तु चित्तस्य वासना च समीरणः
तयोर्विनष्ट एकस्मिन्तौ द्वावपि विनश्यतः २२
मनो यत्र विलीयेत पवनस्तत्र लीयते
पवनो लीयते यत्र मनस्तत्र विलीयते २३
दुग्धाम्बुवत्संमिलितावुभौ तौ
तुल्यक्रियौ मानसमारुतौ हि
यतो मरुत्तत्र मनःप्रवृत्तिर्
यतो मनस्तत्र मरुत्प्रवृत्तिः २४
तत्रैकनाशादपरस्य नाश एकप्रवृत्तेरपरप्रवृत्तिः
अध्वस्तयोश्चेन्द्रियवर्गवृत्तिः प्रध्वस्तयोर्मोक्षपदस्य सिद्धिः २५

रसस्य मनसश्चैव चञ्चलत्वं स्वभावतः
रसो बद्धो मनो बद्धं किं न सिद्ध्यति भूतले २६
मूर्च्छितो हरते व्याधीन्मृतो जीवयति स्वयम्
बद्धः खेचरतां धत्ते रसो वायुश्च पार्वति २७
मनः स्थैर्ये स्थिरो वायुस्ततो बिन्दुः स्थिरो भवेत्
बिन्दुस्थैर्यात्सदा सत्त्वं पिण्डस्थैर्यं प्रजायते २८
इन्द्रियाणां मनो नाथो मनोनाथस्तु मारुतः
मारुतस्य लयो नाथः स लयो नादमाश्रितः २९
सोऽयमेवास्तु मोक्षाख्यो मास्तु वापि मतान्तरे
मनःप्राणलये कश्चिदानन्दः संप्रवर्तते ३०
प्रनष्टश्वासनिश्वासः प्रध्वस्तविषयग्रहः
निश्चेष्टो निर्विकारश्च लयो जयति योगिनाम् ३१
उच्छिन्नसर्वसंकल्पो निःशेषाशेषचेष्टितः
स्वावगम्यो लयः कोऽपि जायते वागगोचरः ३२
यत्र दृष्टिर्लयस्तत्र भूतेन्द्रियसनातनी
सा शक्तिर्जीवभूतानां द्वे अलक्ष्ये लयं गते ३३
लयो लय इति प्राहुः कीदृशं लयलक्षणम्
अपुनर्वासनोत्थानाल्लयो विषयविस्मृतिः ३४
वेदशास्त्रपुराणानि सामान्यगणिका इव
एकैव शांभवी मुद्रा गुप्ता कुलवधूरिव ३५
अथ शांभवी
अन्तर्लक्ष्यं बहिर्दृष्टिर्निमेषोन्मेषवर्जिता
एषा सा शांभवी मुद्रा वेदशास्त्रेषु गोपिता ३६
अन्तर्लक्ष्यविलीनचित्तपवनो योगी यदा वर्तते
दृष्ट्या निश्चलतारया बहिरधः पश्यन्नपश्यन्नपि
मुद्रेयं खलु शांभवी भवति सा लब्धा प्रसादाद्गुरोः
शून्याशून्यविलक्षणं स्फुरति तत्तत्त्वं पदं शांभवम् ३७
श्रीशांभव्याश्च खेचर्या अवस्थाधामभेदतः
भवेच्चित्तलयानन्दः शून्ये चित्सुखरूपिणि ३८

तारे ज्योतिषि संयोज्य किंचिदुन्नमयेद्भ्रुवौ
पूर्वयोगं मनो युञ्जन्नुन्मनीकारकः क्षणात् ३९
केचिदागमजालेन केचिन्निगमसंकुलैः
केचित्तर्केण मुह्यन्ति नैव जानन्ति तारकम् ४०
अर्धोन्मीलितलोचनः स्थिरमना नासाग्रदत्तेक्षणश्
चन्द्रार्कावपि लीनतामुपनयन्निस्पन्दभावेन यः
ज्योतीरूपमशेषबीजमखिलं देदीप्यमानं परं
तत्त्वं तत्पदमेति वस्तु परमं वाच्यं किमत्राधिकम् ४१
दिवा न पूजयेल्लिङ्गं रात्रौ चैव न पूजयेत्
सर्वदा पूजयेल्लिङ्गं दिवारात्रिनिरोधतः ४२
अथ खेचरी
सव्यदक्षिणनाडीस्थो मध्ये चरति मारुतः
तिष्ठते खेचरी मुद्रा तस्मिन्स्थाने न संशयः ४३
इडापिङ्गलयोर्मध्ये शून्यं चैवानिलं ग्रसेत्
तिष्ठते खेचरी मुद्रा तत्र सत्यं पुनः पुनः ४४
सूर्याचन्द्रमसोर्मध्ये निरालम्बान्तरे पुनः
संस्थिता व्योमचक्रे या सा मुद्रा नाम खेचरी ४५
सोमाद्यत्रोदिता धारा साक्षात्सा शिववल्लभा
पूरयेदतुलां दिव्यां सुषुम्नां पश्चिमे मुखे ४६
पुरस्ताच्चैव पूर्येत निश्चिता खेचरी भवेत्
अभ्यस्ता खेचरी मुद्राप्युन्मनी संप्रजायते ४७
भ्रुवोर्मध्ये शिवस्थानं मनस्तत्र विलीयते
ज्ञातव्यं तत्पदं तुर्यं तत्र कालो न विद्यते ४८
अभ्यसेत्खेचरीं तावद्यावत्स्याद्योगनिद्रितः
संप्राप्तयोगनिद्रस्य कालो नास्ति कदाचन ४९
निरालम्बं मनः कृत्वा न किंचिदपि चिन्तयेत्
सबाह्याभ्यन्तरे व्योम्नि घटवत्तिष्ठति ध्रुवम् ५०
बाह्यवायुर्यथा लीनस्तथा मध्यो न संशयः
स्वस्थाने स्थिरतामेति पवनो मनसा सह ५१

एवमभ्यस्यतस्तस्य वायुमार्गे दिवानिशम्
अभ्यासाज्जीर्यते वायुर्मनस्तत्रैव लीयते ५२
अमृतैः प्लावयेद्देहमापादतलमस्तकम्
सिद्ध्यत्येव महाकायो महाबलपराक्रमः ५३
इति खेचरी
शक्तिमध्ये मनः कृत्वा शक्तिं मानसमध्यगाम्
मनसा मन आलोक्य धारयेत्परमं पदम् ५४
खमध्ये कुरु चात्मानमात्ममध्ये च खं कुरु
सर्वं च खमयं कृत्वा न किंचिदपि चिन्तयेत् ५५
अन्तः शून्यो बहिः शून्यः शून्यः कुम्भ इवाम्बरे
अन्तः पूर्णो बहिः पूर्णः पूर्णः कुम्भ इवार्णवे ५६
बाह्यचिन्ता न कर्तव्या तथैवान्तरचिन्तनम्
सर्वचिन्तां परित्यज्य न किंचिदपि चिन्तयेत् ५७
संकल्पमात्रकलनैव जगत्समग्रं
संकल्पमात्रकलनैव मनोविलासः
संकल्पमात्रमतिमुत्सृज निर्विकल्पम्
आश्रित्य निश्चयमवाप्नुहि राम शान्तिम् ५८
कर्पूरमनले यद्वत्सैन्धवं सलिले यथा
तथा संधीयमानं च मनस्तत्त्वे विलीयते ५९
ज्ञेयं सर्वं प्रतीतं च ज्ञानं च मन उच्यते
ज्ञानं ज्ञेयं समं नष्टं नान्यः पन्था द्वितीयकः ६०
मनोदृश्यमिदं सर्वं यत्किंचित्सचराचरम्
मनसो ह्युन्मनीभावाद्द्वैतं नैवोपलभ्यते ६१
ज्ञेयवस्तुपरित्यागाद्विलयं याति मानसम्
मनसो विलये जाते कैवल्यमवशिष्यते ६२
एवं नानाविधोपायाः सम्यक्स्वानुभवान्विताः
समाधिमार्गाः कथिताः पूर्वाचार्यैर्महात्मभिः ६३
सुषुम्नायै कुण्डलिन्यै सुधायै चन्द्रजन्मने
मनोन्मन्यै नमस्तुभ्यं महाशक्त्यै चिदात्मने ६४

अशक्यतत्त्वबोधानां मूढानामपि संमतम्
प्रोक्तं गोरक्षनाथेन नादोपासनमुच्यते ६५
श्रीआदिनाथेन सपादकोटि
लयप्रकाराः कथिता जयन्ति
नादानुसंधानकमेकमेव
मन्यामहे मुख्यतमं लयानाम् ६६
मुक्तासने स्थितो योगी मुद्रां संधाय शांभवीम्
शृणुयाद्दक्षिणे कर्णे नादमन्तस्थमेकधीः ६७
श्रवणपुटनयनयुगल
घ्राणमुखानां निरोधनं कार्यम्
शुद्धसुषुम्नासरणौ
स्फुटममलः श्रूयते नादः ६८
आरम्भश्च घटश्चैव तथा परिचयोऽपि च
निष्पत्तिः सर्वयोगेषु स्यादवस्थाचतुष्टयम् ६९
अथारम्भावस्था
ब्रह्मग्रन्थेर्भवेद्भेदो ह्यानन्दः शून्यसंभवः
विचित्रः क्वणको देहेऽनाहतः श्रूयते ध्वनिः ७०
दिव्यदेहश्च तेजस्वी दिव्यगन्धस्त्वरोगवान्
संपूर्णहृदयः शून्य आरम्भे योगवान्भवेत् ७१
अथ घटावस्था
द्वितीयायां घटीकृत्य वायुर्भवति मध्यगः
दृढासनो भवेद्योगी ज्ञानी देवसमस्तदा ७२
विष्णुग्रन्थेस्ततो भेदात्परमानन्दसूचकः
अतिशून्ये विमर्दश्च भेरीशब्दस्तदा भवेत् ७३
अथ परिचयावस्था
तृतीयायां तु विज्ञेयो विहायो मर्दलध्वनिः
महाशून्यं तदा याति सर्वसिद्धिसमाश्रयम् ७४
चित्तानन्दं तदा जित्वा सहजानन्दसंभवः
दोषदुःखजराव्याधिक्षुधानिद्राविवर्जितः ७५

अथ निष्पत्त्यवस्था
रुद्रग्रन्थिं यदा भित्त्वा शर्वपीठगतोऽनिलः
निष्पत्तौ वैणवः शब्दः क्वणद्वीणाक्वणो भवेत् ७६
एकीभूतं तदा चित्तं राजयोगाभिधानकम्
सृष्टिसंहारकर्तासौ योगीश्वरसमो भवेत् ७७
अस्तु वा मास्तु वा मुक्तिरत्रैवाखण्डितं सुखम्
लयोद्भवमिदं सौख्यं राजयोगादवाप्यते ७८
राजयोगमजानन्तः केवलं हठकर्मिणः
एतानभ्यासिनो मन्ये प्रयासफलवर्जितान् ७९
उन्मन्यवाप्तये शीघ्रं भ्रूध्यानं मम संमतम्
राजयोगपदं प्राप्तुं सुखोपायोऽल्पचेतसाम्
सद्यः प्रत्ययसंधायी जायते नादजो लयः ८०
नादानुसंधानसमाधिभाजां
योगीश्वराणां हृदि वर्धमानम्
आनन्दमेकं वचसामगम्यं
जानाति तं श्रीगुरुनाथ एकः ८१
कर्णौ पिधाय हस्ताभ्यां यं शृणोति ध्वनिं मुनिः
तत्र चित्तं स्थिरीकुर्याद्यावत्स्थिरपदं व्रजेत् ८२
अभ्यस्यमानो नादोऽयं बाह्यमावृणुते ध्वनिम्
पक्षाद्विक्षेपमखिलं जित्वा योगी सुखी भवेत् ८३
श्रूयते प्रथमाभ्यासे नादो नानाविधो महान्
ततोऽभ्यासे वर्धमाने श्रूयते सूक्ष्मसूक्ष्मकः ८४
आदौ जलधिजीमूतभेरीझर्झरसंभवाः
मध्ये मर्दलशङ्खोत्था घण्टाकाहलजास्तथा ८५
अन्ते तु किंकिणीवंशवीणाभ्रमरनिःस्वनाः
इति नानाविधा नादाः श्रूयन्ते देहमध्यगाः ८६
महति श्रूयमाणेऽपि मेघभेर्यादिके ध्वनौ
तत्र सूक्ष्मात्सूक्ष्मतरं नादमेव परामृशेत् ८७
घनमुत्सृज्य वा सूक्ष्मे सूक्ष्ममुत्सृज्य वा घने

रममाणमपि क्षिप्तं मनो नान्यत्र चालयेत् ८८
यत्र कुत्रापि वा नादे लगति प्रथमं मनः
तत्रैव सुस्थिरीभूय तेन सार्धं विलीयते ८९
मकरन्दं पिबन्भृङ्गो गन्धं नापेक्षते यथा
नादासक्तं तथा चित्तं विषयान्नहि काङ्क्षते ९०
मनोमत्तगजेन्द्रस्य विषयोद्यानचारिणः
समर्थोऽयं नियमने निनादनिशिताङ्कुशः ९१
बद्धं तु नादबन्धेन मनः संत्यक्तचापलम्
प्रयाति सुतरां स्थैर्यं छिन्नपक्षः खगो यथा ९२
सर्वचिन्तां परित्यज्य सावधानेन चेतसा
नाद एवानुसंधेयो योगसाम्राज्यमिच्छता ९३
नादोऽन्तरङ्गसारङ्गबन्धने वागुरायते
अन्तरङ्गकुरङ्गस्य वधे व्याधायतेऽपि च ९४
अन्तरङ्गस्य यमिनो वाजिनः परिघायते
नादोपास्तिरतो नित्यमवधार्या हि योगिना ९५
बद्धं विमुक्तचाञ्चल्यं नादगन्धकजारणात्
मनःपारदमाप्नोति निरालम्बाख्यखेऽटनम् ९६
नादश्रवणतः क्षिप्रमन्तरङ्गभुजङ्गमः
विस्मृत्य सर्वमेकाग्रः कुत्रचिन्नहि धावति ९७
काष्ठे प्रवर्तितो वह्निः काष्ठेन सह शाम्यति
नादे प्रवर्तितं चित्तं नादेन सह लीयते ९८
घण्टादिनादसक्तस्तब्धान्तःकरणहरिणस्य
प्रहरणमपि सुकरं स्याच्छरसंधानप्रवीणश्चेत् ९९
अनाहतस्य शब्दस्य ध्वनिर्य उपलभ्यते
ध्वनेरन्तर्गतं ज्ञेयं ज्ञेयस्यान्तर्गतं मनः
मनस्तत्र लयं याति तद्विष्णोः परमं पदम् १००
तावदाकाशसंकल्पो यावच्छब्दः प्रवर्तते
निःशब्दं तत्परं ब्रह्म परमात्मेति गीयते १०१
यत्किंचिन्नादरूपेण श्रूयते शक्तिरेव सा

यस्तत्त्वान्तो निराकारः स एव परमेश्वरः १०२
इति नादानुसन्धानम्
सर्वे हठलयोपाया राजयोगस्य सिद्धये
राजयोगसमारूढः पुरुषः कालवञ्चकः १०३
तत्त्वं बीजं हठः क्षेत्रमौदासीन्यं जलं त्रिभिः
उन्मनी कल्पलतिका सद्य एव प्रवर्तते १०४
सदा नादानुसंधानात्क्षीयन्ते पापसंचयाः
निरञ्जने विलीयेते निश्चितं चित्तमारुतौ १०५
शङ्खदुन्दुभिनादं च न शृणोति कदाचन
काष्ठवज्जायते देह उन्मन्यावस्थया ध्रुवम् १०६
सर्वावस्थाविनिर्मुक्तः सर्वचिन्ताविवर्जितः
मृतवत्तिष्ठते योगी स मुक्तो नात्र संशयः १०७
खाद्यते न च कालेन बाध्यते न च कर्मणा
साध्यते न स केनापि योगी युक्तः समाधिना १०८
न गन्धं न रसं रूपं न च स्पर्शं न निःस्वनम्
नात्मानं न परं वेत्ति योगी युक्तः समाधिना १०९
चित्तं न सुप्तं नोजाग्रत्स्मृतिविस्मृतिवर्जितम्
न चास्तमेति नोदेति यस्यासौ मुक्त एव सः ११०
न विजानाति शीतोष्णं न दुःखं न सुखं तथा
न मानं नापमानं च योगी युक्तः समाधिना १११
स्वस्थो जाग्रदवस्थायां सुप्तवद्योऽवतिष्ठते
निःश्वासोच्छ्वासहीनश्च निश्चितं मुक्त एव सः ११२
अवध्यः सर्वशस्त्राणामशक्यः सर्वदेहिनाम्
अग्राह्यो मन्त्रयन्त्राणां योगी युक्तः समाधिना ११३
यावन्नैव प्रविशति चरन्मारुतो मध्यमार्गे
यावद्बिन्दुर्न भवति दृढः प्राणवातप्रबन्धात्
यावद्ध्याने सहजसदृशं जायते नैव तत्त्वं
तावज्ज्ञानं वदति तदिदं दम्भमिथ्याप्रलापः ११४
इति हठयोगप्रदीपिकायां समाधिलक्षणं नाम चतुर्थोपदेशः

